यमोऽपि—

योमनुष्यो मनुष्यस्य विक्रयाद्धनमिच्छति ।
तस्य मूत्रं पुरीषं च स परत्रोपजीवति ॥
कन्याविक्रयिणो मूर्खा इह किल्बिषकारिणः ।
पतन्ति नरके घोरे दहन्त्या सप्तमं कुलम् ॥

इति । एतदात्मार्थं धनग्रहणे वेदितव्यम् । कन्यार्थे तु न दोष इत्याह मनुः—

यासां नाददते शुल्कं ज्ञातयो न स विक्रयः ।
अर्हणं तत्कुमारीणामानृशंस्यं च केवलम् ॥

इति । यच्छुल्कं कन्यार्थं तत्कुमारीणां केवलमर्हणं पूजनमित्यर्थः। आनृशंस्यमपापित्वम् । अत्र यज्ञपार्श्वः—

विवाहे वितते तन्त्रे होमकाल उपस्थिते ।
कन्याया ऋतुरागच्छेत्कथं कुर्वन्ति याज्ञिकाः ॥
स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि ।
युञ्जान आहुतिं हुत्वा ततस्तन्त्रं प्रवर्तयेत् ॥

इति श्रीसकलविद्याविशारदकेशवादित्यभट्टोपाध्यायसूनुयाज्ञिकदेवणभट्टोपाध्यायविरचितायां स्मृतिचन्द्रिकायां विवाहप्रकरणम्.

समाप्तस्संस्कारकाण्डः.

